सुखानि तेषां चेद् समय, ततः मदिरो मूढः आह च—नाहं यास्यामि गच्छ त्वं यत्र प्रवृत्तोऽसि, मित्रमेव न भवसि त्वं म यस्त्व मामपीनामपि मात्सररूपाणि ब्रूषसि अत मे तावकत्वैः पुनः कृपयोपदेशदानोद्यतो निराकृतवान् , अनेन सद्भावमारोपयितुमशक्यनीयो-ऽयमिति निश्चय , तथा भद्र ! धनवाहन चारुकल्पा भगवन्तो मुनयो मूढस्थानीयेभ्यो दूरभव्येभ्योऽभव्येभ्यो वा यदा धर्मोपदेशाय भिमुखीभवन्ति तदा तेषां तदन्तसमीपगमनमभिधीयते, ततः कुर्वन्ति ते सद्धर्मदेशनया मोक्षगमनं प्रति तदामन्त्रणम्, ततस्ते मूढकल्पा जन्तवः एवमेवमाचक्षीरन्—भद्रन्त भो भोः श्रमणकाः ! किं तेन यौष्माकीणेन मोक्षेण नः प्रयोजनं ?, अथवाप्यलमेव तत्र गमनेन, यतोहि—न तत्र खाद्य नो पेयं, न विलासा न भूषणः । न स्त्रियः प्रियसंयोगो, न कान्ताः कमलेक्षणा ॥ २८९ ॥ न भाष्य सवि मन्म, न गीत नापि नर्तनम् । न हास्य हन्त यौष्माकः, स मोक्षो ननु बन्धनम् ॥ २९० ॥ भवत्त्वरमणीयोऽयमस्माकं प्रतिभासते । सदा संसारविस्तारनिपातावविपातकः ॥ २९१ ॥ यतोऽत्र सन्ति संसारे, खाद्य पेय विभूषणः । विलासा भूषणं नाम, कामदाः पद्मलोचनाः ॥ २९२ ॥ यथेष्टचेष्टाचारित्व, गीत नृत्यं विलेपनम् । विद्यते सर्वमेषात्र, सम्पूर्ण सुखसाधनम् ॥ २९३ ॥ अतो विमुच्य संसारं, सुखसम्भारपूरितम् । भो भोः श्रमणका ! यूय, न मोक्षं गन्तुमर्हथ ॥ २९४ ॥ यदर्थं मोक्षवादेन, संसारे सुन्दरा स्थितिः । मानयित्वा सुखं नित्यं, पश्चान्मोक्षे गमिष्यथ ॥ २९५ ॥ यच्च सद्धर्मवादोऽयं, भवतां मनसि स्थितः । अस्माकमपि सोऽस्त्येव, किं यूय धर्मगर्विता ? ॥ २९६ ॥ तथाहि—भूरिभिर्मदिरापैश्छागैः, प्रचुरैश्च तिपावितैः । कुर्मो चण्डिकादीनां, वयं रुधिरतर्पणम् ॥२९७॥ गोमेधमश्वमेधं च, नरमेधं तथाऽऽदरैः । कुर्मो यागं चतुर्वेदं, भूतग्रामविमर्दनम् ॥ २९८ ॥ कुयोनिवर्धिनः सत्त्वान्, निःशेषान् दुःख पीडितान् । हत्वा हत्वा वयं तु प्राप्नोपयामः कृपापराः ॥ २९९ ॥ पापकर्मा जीवसंघात, मारयित्वा दिने दिने । मांसावारिवसत्र च,

प्रमध्यासो यथेच्छया ॥ ४०० ॥ इत्येवमादिभिर्धर्मैः, कृतकृत्यतया वयम् । भावत्कस्यास्य धर्मस्य, न वार्तां वत कुर्महे ॥ ४०१ ॥ व
चिरं मूढकल्पानामसभ्यानां प्रभाषितम् । आकर्ण्य मुनयो धीरा, जायन्ते करुणापराः ॥ ४०२ ॥ ततस्ते तत्प्रबोधार्थमित्थमाचक्षते
तदा । भो भद्रा ! नैव युक्तोऽयं, भवतां भवविभ्रमः ॥ ४०३ ॥ "एते हि भोगा नागानां, भोगा इव सुदारुणाः । पर्यन्तकटुकाः पा
"पाक्षीप्रसंक्लेशवर्धनाः ॥ ४०४ ॥ नार्योऽनार्याः कृताकार्याः, सर्वमायाकरण्डिकाः । विलासनृत्तसङ्गीतविब्बोकाद्या विडम्बनाः ॥४०५॥
"मोक्षस्तु भद्राः सततमनन्तानन्दसुन्दरः । जीवस्यात्यन्तस्वस्थानं, निःशेषक्लेशवर्जितः ॥ ४०६ ॥ मनुष्यभवमासाद्य, तत्र युक्त भवा
"दृशाम् । सापेक्षविलासादिकौतुकेनात्मवञ्चनम् ॥ ४०७ ॥ एतेषु तच्च भोगेषु, कतिचिद्दिनभाविषु । मा मोक्षमार्गमुत्सृज्य, गच्छ-
"तानन्तके भवे ॥ ४०८ ॥ धर्मोऽनुष्ठानयुक्तश्च, सर्वेऽपि मारणादिकम् । यूयं कुरुथ तत्पाप, सर्वं संसारवर्धनम् ॥ ४०९ ॥ कृपास
"कारमोहेन, मा कुरुध्वमतोऽक्षमम् । अहिंसाद्यात्मक धर्मं, कुरुध्व पापसूदनम् ॥ ४१० ॥" अथेदृक्षं मुनीनां ते, वाक्यमाकर्ण्य पेशलम् ।
मूढकल्पा मनाक्तूर्णं, प्रद्वेषं यान्ति पापिनः ॥ ४११ ॥ भवन्ति च ततो रुष्टा, भो भोः श्रमणका ! वयम् । शिक्षणीया न युष्माभिर्यात
यात यथाऽऽगताः ॥ ४१२ ॥ भोगाभिनन्द पापिष्ठा, धर्मं चास्मदभिप्रेतिसम् । ततो नो वैरिका यूयं, नेभ्यासोऽन्यकमन्दिरम् ॥ ४१३ ॥
ईदृशोऽपीह सद्धर्मो, यदयं को न रोचते । ततोऽलं युष्मदीयेन, धर्मेण पुरुषाधमाः ! ॥ ४१४ ॥ निषेवध्वं सद्धर्मं, निर्जरेभ्यः श्रमणा
धमाः । आत्मीयजनकेभ्यो भो, न स्वसाक प्रयोजनम् ॥ ४१५ ॥ तदिदं मूढजन्तूनां, वाक्यमाकर्ण्य साधवः । भूयः करुणया यावत्
भूयो धर्मस्य लक्षणम् ॥ ४१६ ॥ तावत्ते निर्दयं कुद्धा, यष्टीद्या रुकलोपनाः । गाढप्रहारदानाद्यौ, प्रवर्तन्ते न संशयः ॥ ४१७ ॥ तत
सदाचारा धीरस्य, मुनयो मूढचेष्टितम् । निश्चिन्वन्ति निजे चित्ते, नैते साध्याः कथंचन ॥ ४१८ ॥ ततस्ते साधवस्तेषामुपेक्षां कुर्वते

मतः । न भवेद्रोहले चित्तं, स ध्यानाभावे विनिश्चिते ॥ ४१९ ॥ ४ । ततो यथा चारुपदस्य कुर्वतोरुभयोर्योग्यद्विप्रयोर्भृते रत्नाना यो-
ग्ये ते तौ च गृहीत्वा गतमारः सम्मान आचारयोऽपि राजविनियोगेन सततमनन्यानन्दभाजन, मूढस्तु दुर्मतिकुन्देन भरपतिना निष्का
सितस्ततो द्वीपात् मक्षिप्तः समुद्रे सजातोऽनन्तदुःखसम्भारभाजनमिति, तथा भद्र! घनवाहन मुनीनामुपदेशा पूर्वोक्त कुर्वतां तेषा एतानि
रत्नाना मद्रकमम्यमिथ्यादृष्टीनां च क्रमेण तत्वे पारमेश्वरे प्रवचने वर्तन्ते ज्ञानादयो गुणाः भियन्ते तेषामात्मानः ततः सर्वेऽपि ग
च्छन्ति परमपदे आसन्ते सततमनन्तानन्दसन्दोहभाजो ज्ञानदर्शनचारित्रविनियोगेन, मूढजन्तवस्तु कुर्वन्ति पापभरपूरणं, ततः कुदैव
स्वकर्मपरिणामभुजा निर्वास्यन्ते मनुष्यभवरत्नद्वीपात् पात्यन्ते संसारसागरे भवन्ति निरन्तरदुःखसम्भारभाजनमिति । तदत्र—एवं
कथानकमास, ज्ञात्वा भावार्थमीदृशम् । भवं मद्रविधो भावः, साधुर्मो घनवाहन ! ॥ ४२० ॥ एवंविधविवेकस्य, कारणं कर्मदारणे ।
को वा कथानक मन्त्र, श्रुते नो मुनिर्वा भवेत् ? ॥ ४२१ ॥ रत्नद्वीपसमे प्राप्त, मानुष्ये भद्र ! भाविकैः । रत्नभूताऽऽगमबोद्धित्व, को न
गच्छेन्निष्क्रियाऽक्षयम् ? ॥ ४२२ ॥ ततो भद्रेऽपाहितसद्बुद्धे ! यदिदमीदृक्षमकलङ्कवचनमाकर्णयतो मे जनिता यदी कर्मस्थितिः समजातो भद्र
कमावः मुखासिव मनागकलङ्क वचन तथापि स्थितोऽहं मौनेनैव, ✓प्राप्तोऽकलङ्कः सहितो मया पद्ममुनिसमीप वन्दितो मुनिवरः धर्म-
लाभितोऽनेन कृता प्रस्तावना पृष्ट सोऽपि वैराग्यकारण, मुनिनोक्तं—नगरी संसृतिर्नाम, मत्त्यनादिरनन्तिका । तदीयो हट्टमार्गो म,
जातो वैराग्यकारणम् ॥ ४२३ ॥ अकलङ्केन चिन्तित—अरघट्टः पुरा यादृग्, मुनिना मे निवेदितः । मूल भो हट्टमार्गोऽपि, तादृशो-
ऽत्र भविष्यति ॥ ४२४ ॥ ततः मोक्तमकलङ्केन—निवेदय महाभाग!, मध्यमेन स्फुटाक्षरैः । हट्टमार्गः स संजातो, यस्ते वैराग्यकार
णम् ॥ ४२५ ॥ मुनिराह महाभागो, योऽत्र ध्यानस्थितो मुनिः । अनेन जन्मसन्तानः, स दृष्टो मम दर्शितः ॥ ४२६ ॥ स्थिरचित्तः

सुदीर्घोभिर्मवापणपंक्तिभिः । भूरिभि सुखदुःखाद्यैः, स पण्यैः परिपूरितः ॥ ४२७ ॥ माकुलैः सत्त्वमोपुष्यैः, क्रयविक्रयतत्परैः ।
जीववाणिजकैर्नित्य, स्वार्थनिष्ठैर्निषेवितः ॥ ४२८ ॥ पुण्यापुण्याभिधानैश्च, लोकोत्कृष्टविमध्यमैः । मूल्यैः पण्यानि लभ्यन्ते, स्वानुरू-
पाणि तत्र भोः ! ॥ ४२९ ॥ नित्य व्यवहरन्नेष, सर्वोत्पादितापणः । अपुण्यजीवरोरैश्च, भूरिभिः परिपूरित ॥ ४३० ॥ महामोहा
मिधानोऽत्र, बलाधिकृत उच्यते । कामक्रोधादयस्तस्य, पुरुषाः परिचारकाः ॥ ४३१ ॥ घोरैर्जीवाधमर्णानां, कर्मस्कन्धैर्धनिकैः सदा ।
क्रियते धरणक तत्र, दुर्मोचमतिदारुणम् ॥ ४३२ ॥ सदा कलकलायन्ते, लोकोद्वेगविधायिनः । भटाः कषायनामानस्तत्र दुर्दान्तदि
म्मकाः ॥ ४३३ ॥ अनेकाश्चर्यभूयिष्ठो, विचित्रः सत्त्वसंकुलः । नान्यो जगति तादृक्षो, हट्टमार्गो नरोत्तम ! ॥ ४३४ ॥ केवलं ते मया
लोका, यावत्सम्यक् निरीक्षिताः । दृष्टे सर्वेऽपि विज्ञातावाच्यत्यन्तदुःखिताः ॥ ४३५ ॥ अथानेन महाभाग !, मुनिना मम लोचने ।
अर्पिते कृपया भद्र !, ज्ञानाञ्जनशलाकया ॥ ४३६ ॥ ततो विमलदृष्टित्वाद्दृष्टो दूरे व्यवस्थितः । मया हट्टात्समुत्तीर्णो, मठो नाम
शिवालयः ॥ ४३७ ॥ तत्रानन्ता मया दृष्टाः, सदानन्दसुन्दराः । सन्तुष्टिरसा भो लोका !, दुःखाद्या बाधवर्जिताः ॥ ४३८ ॥ ततो
मे तत्र सम्भ्रमो, हट्टमार्गो बृहत्तमः । असतो भद्र ! निर्वेदो, मठोन्मायक एव च ॥ ४३९ ॥ तत्रत्यं महाभागो, मुनिः प्रोक्तवान्
मया । हट्टमेन परित्यज्य, मठे यामः शिवालये ॥ ४४० ॥ यतः—नास्ति मे क्षणमप्यत्र, रतिर्नाथ ! सुदारुणे । हट्टमार्गे व्रजामोऽद्य
त्वया सार्धं शिवालये ॥४४१॥ मुनिनोक्तं यदीच्छा ते, मठे गन्तुं नरोत्तम ! । गृहाण मामिकां दीक्षां, ततोऽस्य भाविकामरम् ॥ ४४२ ॥
मयोक्तं दीयतां नाथ !, मा विलम्बो विधीयताम् । ततो दत्ता भवानेन, दीक्षेय पारमेश्वरी ॥ ४४३ ॥ उपदिष्टं च कर्तव्यं, मठप्रापण
कारणम् । अद्य तदेव कुर्वाणो, भद्र ! तिष्ठामि साम्प्रतम् ॥ ४४४ ॥ मकरध्वजेनोक्त—कीदृशं नाथ ! कर्तव्यं, गुरुणा ते निवेदितम् ।

अमीषु वानरस्त्रीस्वरूपं विडम्बयन्ति गन्धेनापि मूर्च्छयन्ति दर्शनेनापि उन्मादयन्ति स्मरणेनापि मारयन्ति स्पर्शनेनास्वादनेन च पुनर्यदिह निपातयन्ति तत्र किमाश्चर्यं?, ते चास्यामीभिरुपद्रवैरुपद्रुतस्य विह्वलतया सहकारादय इति प्रतिभासन्ते, ततो निर्गच्छति तदभिमुखं वैराग्यकुतोऽप्यभिलाषेण रज्यते सुन्दराणीति बुद्ध्या केषुचित्स्कन्धेषु द्वेष्टि न सुन्दराणीति बुद्ध्या कानिचित्स्कन्धानि भ्रमतीति लोलत्वातिरेकेणानवरतं तच्छाखान्तरेषु लुठति चिरतामर्थमभिपयसा तद्योगवर्तिनि पत्रफलकुसुमरजःकचवरे, ततस्तेषु परिभ्रमतस्तु तुच्छ कर्मपरमाणुनिचयसंज्ञेन तदीयफलकुसुमरेणुना आश्लिष्यते भोगस्नेहनामकेन मकरन्दबिन्दुनिस्यन्दसन्दोहसर्पेण, ततो मया गृहीतवचनभावार्थेन चिन्तितं—अये! वृक्षावयवेषु सामान्यरूपाः शब्दरूपरसगन्धस्पर्शा भविष्यन्ति कुसुमानि पुनरपरिस्फुटास्वादविशेषाः फलानि तु परिस्फुटास्वादविशेषा एव शाखान्तराणि पुनस्तदाधारवस्तुस्थानानि, तेषु च सञ्चरणं चित्तवानरस्त्रीस्वरूपस्य लोकोपचारेणाभिहितं, यथाऽऽलौकिकाः 'अमुत्र गतं मे चित्तमिति', एवं च स्थिते गुरु मयैव तावत्समस्तं मुनिना भाषितं भोत्स्यते चेति विचिन्त्य मयाऽभिहितं—भदन्त! ततस्ततः?, गुरुराह—ततो भद्र! भोगस्नेहार्द्रीभूते कर्मपरमाणुप्रचयरजोगुण्ठिते तत्र चित्तवानरस्त्रीस्वरूपशरीरे विकलतया कोपस्य भेदकतया विषरूपत्वात्तस्य रजसः संजायन्ते व्रतानि सम्पद्यते अजीर्णीभावः व्याप्यते समस्तान्यप्यवयवाः दह्यते विषरूपेण तेन रजसा, ततो भजते कृष्णरूपतां तच्छरीरं कथित्स्वपद्यते रक्तीभावः, ततस्तत्र गर्भगृहके वर्तमानं तदेषां सर्वेषां पूर्वोक्तानामुपद्रवविक्षेपाणां गम्यं भवति ततो बाध्यते नानाविधं तैरिति, तदेष भद्र! तस्य चित्तवानरस्त्रीस्वरूपस्य सरक्षणोपायो यदुत—गृहीत्वा स्ववीर्यसंविनात्महस्तेन दृढमप्रमादनामकं वज्रदण्डं तच्चित्तवानरस्त्रीस्वरूपं तैरक्षनामकैर्गवाक्षैर्विषयवृक्षफलभक्षणस्पृहया निर्गच्छदास्फोट्य निवारणीयं तथापि चटुलतया निस्सरत्पुनः पुनराक्रोशनीयं, ततो निषिद्धबहिर्गमनस्य निवृत्तसहकारादिकामिषस्य तस्य शोषमुपयास्यत्यसौ

भद्रकेन मठे तत्र, भगवन्नान्तुमिच्छसि ? ॥४४५॥ मुनिनोक्तं—आकर्णय—अभिहितोऽहं भगवता तदाऽनेन गुरुणा यथा सौम्य ! अस्ति तावद्भवतः परिमठः नराभिधानः पञ्चाक्षनामगवाक्षो निवासार्थमपवरकः, तत्र च कार्मणशरीरनामकमपवरकगवाक्षाभिमुखस्थयोपशामा भिधानं च गर्भगृहकं, तत्र च चित्ताभिधानमतितरलं वानरपोतरूपं ?, मयोक्तं—बाढं समस्तमस्ति, गुरुणोक्तं—यद्येवं ततो गृहीत नैव तेन सर्वेण तावद्भवता भद्रजितस्य यतो न शक्यते तत्क्षण एव विराधयितुं, मयोक्तं—यदाज्ञापयति नाथः, ततः प्रतिपन्नोऽहं, गुरुणोक्तं—भद्र ! स्वयं वानरपोतरूपं सुरक्षितं कर्तव्यं, मयोक्तं—यदादिशति नाथः, केवलं कुतो भयमिति कथयन्तु भगवन्तः, ततोऽभिहितमनेन मुनिना—यथा "सौम्य ! विद्यन्ते तत्र गर्भगृहके वसतोऽस्य भूयांसः स्वरूपापकारिणो यतो भक्ष्यते बराकमिदं 'कषायनामकैर्मदुन्दुरूपकैः उरःपट्टीभिर्भ्रष्यते नोकषायाख्यैर्वनपदुमिर्कुष्टपृष्ठिकैः प्लाव्यते संज्ञाख्याभिः क्रूरमार्जारीभिः विलुप्यते रागद्वेष "नामकाभ्यां भीषणकोलोन्दुराभ्यां ग्रस्यते महामोहसंज्ञेनातिरौद्रमार्जारेण उपताप्यते परीषहोपसर्गाख्यैः सततं कीटपङ्क्तिसमूहैः विक्र "ढीक्यते दुष्टाभिसन्धिसितचर्मास्यैर्मनुष्यैर्मक्षिकाभिरत्युग्रैः उपद्रूयतेऽलीकविकल्पाभिधानाभिर्गृहकोकिलिकाभिः अभिभूयते दारुणाकारैः "प्रमादकृकलासैः उपद्रूयतेऽनवरतमविरतिसंज्ञाभ्याख्यनामकेन पट्पदिकावातेन भ्रशीक्रियते मिथ्यादर्शनसंज्ञेनातिघोरेण तमसा" तदेवमेते भद्र ! तत्र गर्भगृहके सततमापिनोऽस्य वराकस्योपद्रवविशेषाः, तदित्थमेवामीभिरुपद्रवैरुपद्रुतं चित्ताभिधानं वानरपोतरूपं वेदनातुर निःसहतया निपतति रौद्रध्यानाभिधाने सुज्वलितखादिराङ्गारकुण्डे कम्पितचुनः प्रविशत्यनेककुविकल्पाख्यत्वावच्छ्वासावनतमुखे भीषणे गाढमार्तध्यानाभिधाने महाबिले, तदिदमप्रमत्तेन भवता सततं रक्षणीयं, मयोक्तं—भदन्त ! कः पुनरस्य रक्षणोपायः, गुरुराह—भद्र ! ये ते विद्यन्ते तत्रापवरके पञ्च गवाक्षास्तेषां द्वारेषु विषयनामानः पञ्चैव विषवृक्षा विद्यन्ते, ते चातिदारुणाः स्वरूपेण, यतस्ते नाम-

भोगस्नेहसपर्शितः शरीरार्द्रीभावः, ततः शुष्कशरीरतरुरिसटिष्यति प्रविश्य तत्रसो रोक्ष्यन्ति क्षयानि भयमासमति अजरता न भवि ष्यति कृष्णता मिनङ्क्ष्यति रक्तीभावः भाविर्भविष्यति भवतया सपत्नवे शरीरस्यैव समनिष्यते दर्शनीयता, ततो न प्रभविष्यन्ति ते प्रागुपवर्णिताः तत्रापि गर्भगृहके वर्तमानस्य तस्योपद्रवविशेषा', किं च तेऽपि मार्जारमूषककोकोन्दुरादयस्तस्य वानरलीबरूपस्योपद्रव कारिणः समस्तास्तेनैवाप्रमादनामकेन यवदण्डेन भवता चूर्णनीयाः, ततस्तेषु सचूर्णितेषु छत्रभगृहकमागसस्थरिष्णु वानरलीबरूप निराब भविष्यति, तदय भद्र ' तस्य संरक्षणोपायः, मयोक्त—भदन्त ' तस्कि पुनस्तेनेरस्य संरक्षितेन मम सेत्स्यति प्रयोजनं ?, भगवताऽभिहित —ननु भद्र ' यद्भवतोऽभिप्रेत शिवालयमठगमन तदेतदेव चित्तवानरलीबरूपं सुसरक्षितमुपायभूत वर्तते ॥ यतहि रक्षित सम्यक्, समवक्षेव कारणम् । निर्बाध गमनस्योचैः, पुरुपस्य शिवालये ॥ ४४६ ॥ तदभेपत्र हे भद्र', विषये गमने मति । भस्य सरक्षणेऽ प्येवं, ततो यत्न समाचर ॥ ४४७ ॥ किं च—यावत्क बहुकालीन, वर्तते भद्र' दुस्तरम् । भस्य वानरलीवस्य, चरित ते मयोदितम् ॥ ४४८ ॥ तथाहि—तथैरुपद्रवैर्गाढ, पीडित मूषकादिभिः । वेदनाविह्वलं मोहात्तत्सकेषु प्रवर्तते ॥ ४४९ ॥ ततश्च—शुष्यते रक्तता भूयो, भियते सम्वबिन्दुभिः । ततः क्षयानि जायन्ते, बाध्यते मूषिकादिभिः ॥ ४५० ॥ ततस्तद्रक्षणासक्ता, वर्धन्ते मूषिकादय । भूयश्च बाध्यमान तैरातकेष्वेव धावति ॥ ४५१ ॥ पुनर्गुणतनमेवास्य, खेदेन पुनरार्द्रता । पुनश्च क्षतसम्पत्तिः, पुन सर्वेऽप्युपद्रवा ॥ ४५२ ॥ सदैव चाक्रके भद्र!, गतमेतदनिश्चिते । न मुक्त्वा तावकीं रक्षां, निर्बाधं क्रम्त जायते ॥ ४५३ ॥ ततो योऽय मया प्रोक्तो, त्वः सरक्षणे वरः । स एव भवता नित्यमनुष्ठेयो नरोत्तम ' ॥ ४५४ ॥ ततो गृहीतमाचार्यवचसाऽह पर्यचिन्तयम् । इद मया भदन्तेन, मपञ्चेन निवेदितम् ॥४५५॥ यथुत—रागाद्युपद्रुत चित्त, विषयेषु प्रवर्तत । तेषु चास्य प्रवृत्तस्य, वर्धते कर्मसञ्चयः ॥४५६॥

|| ४९० || तथैव नियमाज्जीवो, जीवन्निव न वा भवेत् । यतः केवलिनो जीवा, भावचित्तविवर्जिताः || ४९१ || एवं च स्थिते—
मिथ्याज्ञानविपर्यासाज्जीवो रागादिसंगतः । सततं दुःखरूपेषु, सुखबुध्या प्रवर्तते || ४९२ || ततः कर्माणुसङ्घातमादत्ते खेद
तन्तुभिः । ततो जन्मान्तरारम्भ, विषये तत्क्षयम् || ४९३ || पुनस्तत्र विपर्यासः, पुना रागादिसन्ततिः । पुनश्च विषयाकांक्षा,
पुनस्ते खेदसन्ततः || ४९४ || पुनश्च कर्मग्रहणं, पुनर्जन्मसमुद्भवः । पुनस्तत्र विपर्यासः, पुना रागादिकः क्रमः || ४९५ || एव या-
वदविच्छिन्न, विपर्यासादिचक्रकम् । जीवस्य वर्तते तावदनिष्टा भवपद्धतिः || ४९६ || इत्यमभ्यूहितं नाथ !, मया चक्रकमञ्जसा । दु
ष्करमेतत्सुकरं वा, भूय विज्ञातुमर्हथ || ४९७ || मुनिनोक्त महाभाग !, दुष्करमेतत्र संशयः । कथं वाऽऽदुष्करचारो, भवन्तीह भवाहशाः ?
|| ४९८ || मयाऽपीह ततो ज्ञात, गुरुभिश्च समर्पितम् । अनिष्टितभवे हेतुर्विपर्यासादिचक्रकम् || ४९९ || अत एव परित्याज्यो, वि
पर्यासो विवेकिना । तदुच्छेदे प्रलीयन्ते, निर्मूलत्वेन शेषकाः || ५०० || अयमेव विवेकोऽत्र, तत्त्वज्ञानमिद मतम् । अय निराश्रवो
धर्मो, यद्विपर्यासवर्जनम् || ५०१ || अविपर्यस्तचित्तानां, पुरुषस्याप्रमादिनः । मनोविकारजालं हि, स्वस्मान्निश्च प्रकाश्यते
|| ५०२ || ततो विविक्तमात्मान, सदानन्द प्रपश्यतः । नास्य संजायते द्वेषो, दुःखे नापि सुखे स्पृहा || ५०३ || निरभिष्वङ्ग-
चित्तोऽसौ, ततः कर्माणुसञ्चयम् । विषयेभ्यो मुक्तस्वान्त विषये कदाचन || ५०४ || ततोऽसौ वीजविरहाभिःस्रुतत्वाद्भवान्तरम् । दु
ष्करमारभेतात्मकक विनिवर्तते || ५०५ || एव च स्थिते—यत्कर्मैव धर्न मोक्ष, यच्चेद भवचक्रकम् । अनयोर्यो विजानाति, प्रवर्त
ननिवर्तने || ५०६ || स किं शरीरे भोगेषु, धने वा भवभाविनि । अन्यत्र वा पदार्थे भो !, राग कुर्यात्कदाचन ? || ५०७ || युग्मम् ।
यश्च सांसारिके कुर्यात्पदार्थे चित्तनिर्वृतिम् । भावापि तस्यथो ज्ञात, तेनेव चक्रकद्वयम् || ५०८ || यतः—फल ज्ञानक्रियायोगे,

“यम् ॥ ४७४ ॥ अनन्तदर्शनज्ञानवीर्यानन्दमपूरिते । चित्त ! कृत्वाऽऽत्मनि स्थानं, भज धीर्यं निराकुलः ॥ ४७५ ॥ अत्र
“ते शिवतो नित्यं, भोगलोकस्य भोपणे । समाते जायतेऽत्यय, रजःपातो न संशयः ॥ ४७६ ॥ तथा—संक्लिष्टवासनाजन्या, प्रया
‘रोहन्ति दारुणाः । तत्स्वरूपापनिर्मुक्त, न त्वं भोगेषु रज्यसे ॥ ४७७ ॥ पिण्डीमाया सुधैः मोक्ता, भोगाभिषक्ततेषु ते । अत एव मु
“हूर्त ते, मासन्ते सास्म्यकारिणः ॥ ४७८ ॥ मुहूर्तसुखमाधाय, ते गुप्ताः क्षतवर्धनम् । संक्लिष्टवासनाध्यानाज्जनयन्ति सुदा
“रुणम् ॥ ४७९ ॥ इतरथा—संक्लिष्टवासनोन्मुखे, स्वे तव शरीरके । निर्बाधे सततानन्दे, वसिष्यतैव न आयते ॥ ४८० ॥ तदेव
“ससिते चित्त !, हित्वा सर्वं बहिर्भ्रमम् । स्वरूपे सतत तिष्ठ, लीन इत्थं निरातुरम् ॥ ४८१ ॥” एवं च शिक्षयित्वेदं, चित्त सम्यग्-
विधानतः । अत्रैव रक्षणोपुक्तो, भविष्यामि समाहितः ॥ ४८२ ॥ यथाऽनुशिष्टमप्येतत्लेव दुरात्मकम् । यत्नाभिराकरिष्यामि, बहिर्भ्र-
मणतः पुनः ॥४८३॥ कषायनोकषायाख्या, ये चोपद्रवकारिणः । अस्य तानपि निःशेषान्, हनिष्याम्यप्रमादतः ॥ ४८४ ॥ विशोद्येन
ध्यानेन, प्रतिपक्षनिषेवया । यास्यन्ति प्रलयं सर्वे, तूर्णं रागाद्युपद्रवाः ॥ ४८५ ॥ ततस्तेषु प्रलीनेषु, भविष्यन्ति न बाधकाः ।
परीषहोपसर्गाद्या, बहिरङ्गाद्युपद्रवाः ॥ ४८६ ॥ आत्मारामं ततो भूत्वा, भवितव्यबहिर्भ्रमम् । रागाद्युपद्रवैर्मुक्त, मोक्षायैव घटिष्यते
॥ ४८७ ॥ एवं परिकल्प्याहं, हृदये सुविनिश्चितः । तदेव कुर्वन्निश्चलमेव तिष्ठामि साम्प्रतम् ॥ ४८८ ॥ अकलङ्केनोक्तं—साधु म
हन्त ! साधु सम्यग् कृतं भदन्तेन गुरुवचनं सम्यक् धारयता तदाचरणं मयाऽपीत पञ्चक भगवन्निर्वेदितमाकर्ण्यान्यदपि यत्कमप्यू
हित तदुक्तमपुक्त चाऽऽकर्णयतु भगवान्, मुनिनोक्तं—निवेदयतु भद्रः, अकलङ्केनोक्तं—विषमेषु द्विधा तावद्द्रव्यतो भावतस्तथा ।
भाप पर्याप्तियुक्तस्याऽऽत्मीयं पुद्गलात्मकम् ॥ ४८९ ॥ तत्र प्रयुक्तो जीवस्तु, भावचित्त निगद्यते । तत्कार्मणशरीरस्य, तेन भिन्न निवेद्यते

|| ४९० || तथैव नियमाधीनो, जीवश्चित्त न वा भवेत् । यतः केवलिनो जीवा, आत्मचित्तविवर्जिताः || ४९१ || एवं च स्थिते—
मिथ्याज्ञानविपर्यासाधीनो रागादिसंगतः । सतत दुःखरूपेषु, सुखबुद्ध्या प्रवर्तते || ४९२ || ततः कर्माणुसन्तानमाप्नोते मोह
तन्तुभिः । ततो जन्मान्तरारम्भ, विपाके तत्क्षयम् || ४९३ || पुनस्तत्र विपर्यासः, पुना रागादिसम्भवः । पुनश्च विषयाकांक्षा,
पुनस्ते मोहबन्धनः || ४९४ || पुनश्च कर्मग्रहण, पुनर्जन्मसमुद्भवः । पुनस्तत्र विपर्यासः, पुना रागादिकः क्रमः || ४९५ || एवं या
वदविच्छिन्न, विपर्यासादिचक्रकम् । जीवस्य वर्तते तावन्निष्ठा भवपद्धतिः || ४९६ || इदमभ्यूहितं नाथ!, मया चक्रकमवसा । यु
क्तमेवद्युक्त वा, यूयं विज्ञातुमर्हथ || ४९७ || मुनिनोक्तं महाभाग!, युक्तमेतत्र संशयः । कथं वाऽयुक्तचेतारो, भवन्तीह भवादृशाः?
|| ४९८ || मयाऽपीह ततो ज्ञात, गुरुभिश्च समर्पितम् । अनिश्चितभवे हेतुर्विपर्यासादिचक्रकम् || ४९९ || अत एव परित्याज्यो, वि
पर्यासो विवेकिना । तदुच्छेदे प्रलीयन्ते, निर्मूलत्वेन शेषकाः || ५०० || अयमेव विवेकोऽत्र, तत्त्वज्ञानमिदं मतम् । मम निराकृतो
धर्मो, यद्विपर्यासवर्जनम् || ५०१ || अविपर्यस्तविज्ञातुः, पुरुषस्याप्रमादिनः । मनोविकारजालं हि, स्वसाक्षिकं प्रकाश्यते
|| ५०२ || ततो विविक्तमात्मानं, सदानन्दं प्रपश्यतः । नास्य संजायते द्वेषो, दुःखे नापि सुखे स्पृहा || ५०३ || निरभिष्वङ्ग-
चित्तोऽसौ, ततः कर्माणुसञ्चयम् । विषयोद्भूतस्याप विपाके क्षपयन् || ५०४ || ततोऽसौ बीजनिर्दग्धाभिःस्वदत्ताङ्कुरान्तरम् । सु
खमारभेतात्मकं विनिवर्तते || ५०५ || एवं च स्थिते—यत्कर्मबन्धनं मोक्ष, यच्च भवचक्रकम् । अनयोर्यो विधानास्ति, प्रवर्त
ननिवर्तने || ५०६ || स किं शरीरे भोगेषु, धने वा भवभाविनि । अन्यत्र वा पदार्थे भो!, रागं कुर्यात्कदाचन? || ५०७ || युग्मम् ।
यस्य सांसारिके कुर्यात्पदार्थे चित्तनिर्वृतिम् । मायापि तस्य वो नाथ, तेनैव चक्रकक्षयम् || ५०८ || यतः—फल ज्ञानक्रियायोगे,

क्रमसङ्ख्येयाः समस्ता अप्यसंख्येया निगद्यन्ते अध्यवसायस्थानाभिधानाः घटिकाः, तथा प्रथमया विरचितास्तावदसङ्ख्येयाः प्रथमाः कृष्ण-
वर्णाः एवं द्वितीयया द्वितीया नीलाभभासाः तृतीयया तृतीयाः कपोताभाः चतुर्थ्या च चतुर्थ्यस्तेजोभास्वराः पञ्चम्या पञ्चम्यो धवल-
पद्मच्छायाः षष्ठ्या षष्ठ्यो विशुद्धस्फटिकनिर्मलाभाः घटिका इति, तत्राद्ययोषिद्विनिर्मितासु घटिकासु वर्तमानं तद्वानरजीवरूपमुत्प्लुत्यो
त्सुक्य बलात् धावति गवाक्षकैस्तैर्ग्रामकेषु लुठति तत्र रजःकचवरे गुण्ठ्यते तेन रजसा भिद्यते तैः स्वेदनिष्यन्दबिन्दुभिः, ततस्तथा
लुठत्तैस्तैरीरितमूर्तं तेषां मूषकमार्जारकोलोन्दुरादीनां सर्वेषामुपद्रवविशेषाणामभिभवनीयं भवति, ततः कथमिदमिव लक्ष्यत कथिद् भू-
मितप्रविष्टे कापिलूरसां भारयति सर्वथा सततसंतप्त एवास्ते इति तथापि चानन्तदुःखपरम्पराकारणं सम्पद्यते, तस्मात्कृष्णा तद्वानर
जीव तास्वः घटिकाभ्यो निःसारणीयमुपर्यारोहणीय, ततश्चतुर्थयोषिन्निर्मितासु तासु घटिकासु प्रतिक्षणमारोहतस्तस्य वानरजीवरूपस्य
स्तोकीभविष्यति सन्तापः प्रतनुतां यास्यन्ति बाधाकारिणस्ते मूषकादयः क्षुद्रोपद्रवाः मनाक् स्वस्थीभविष्यत्यात्मकाभिलाषः तत शोप
शीतमुपयास्यति सा मकरन्दनिष्यन्दार्द्रता परिशटिष्यति किंचिद्रजः ततो लप्स्यते मनाक् सुखासिकां भविष्यति तदपि तेजोभास्वरं
वर्णेन, तत पञ्चमाङ्गनाघटितघटिकासु भवता तदारोहणीय, तासु चारोहतस्तस्य स्तोकतरीभविष्यति सतापः प्रतनुतरा भवि-
ष्यन्त्युपद्रवाः स्वस्थतरः संपत्स्यतेऽप्यात्मकाभिलाषः शुक्लतरं भविष्यति शरीरकं निपतिष्यति तस्माद् बहुतरो रेणुनिचयः, ततो
मनागस्य रोचयिष्यन्ति उपविशेषाः आस्कन्दिष्यतीव महाह्लाद धारयिष्यति पद्मशोभां वर्धिष्यति शरीरेण भविष्यति विशालतरं, ततः षष्ठक-
न्याविरचितघटिकासु भवता तदारोहणीयं, तासु चारोहतस्तस्य स्तोकतमीभविष्यति दुःखासिका प्रकर्षं यास्यन्त्युपद्रवविशेषाः अत्यन्त
स्वस्थतमीभविष्यत्यात्मकाभिलाषः त्रुटिष्यति रजःकचवरलोठनेच्छा सर्वथा शोषमुपयास्यति मकरन्दरसार्द्रता, ततः शुक्लतरशरीरादि

स्पेयमनुभविष्यति भूषितो रेणुभिश्च संक्रमिष्यते तत्सवताप्रायं भविष्यति शुद्धस्फटिकनिर्मलता । अन्यच्च—अत्र योषिद्विरचितपारितपत्रिकामार्गेऽत्युच्चमारोहतस्तव लगिष्यति मन्दः सुखकारितया शीतः सन्तापहारितया सुरभिः सद्भूतकुसुमगन्धकमलवनमकरन्दरेणुधारितया धर्मध्यानाभिधानः पवनः, तत्सम्बन्धे भविष्यति तत्सवतस्य मधुरितं, इदञ्च भीतमिव तेभ्योऽपसरद्भ्यो मूषकमार्जारकोटरेषु रहस्मिकक्कासरद्रकोकिलिकादिभ्यो नानाविधोपद्रवेभ्यः समुद्विग्नमिव तेन विततेन महान्धकारेण आपनारीश्रपविरचित पत्रिकामार्गेनपहाय तत्र पवित्रमयोषिद्विनिर्मिते भयविरहिते सततमकाले पत्रिकामार्गे निलीनमास्ते तस्य वानरस्त्रीरूपस्य सन्धपि वानरयूथ, पपत्रारोहतस्तव तत्क्षेपमधिष्ठित मध्यमवयसम्बोधसंयमसद्गोधारिनामकवानरपरिवारेण विशुद्धधर्ममहावानरेण समन्वित पृथ्वीसमासु वासिकाभिर्निःश्वासिनमिस्त्वतिशुद्धिधारणामेधाप्राप्तिनिःस्पृहत्वादिसमाभिर्वरवानरीभिः सकुच धैर्यवीर्यौदार्यगाम्भीर्यशौण्डीर्यप्रधानदर्शन तपःसत्वैरन्याकिञ्चन्यमार्दवार्जवप्रशमाधारिनामकैर्वरवानरस्त्रीरूपैराविर्भविष्यति किंचित्कराचितस्वाचितपत्रिकायां, तत्र तस्य मम धीमद्वानरस्त्रीरूपस्य शरीरं जीवितं सर्वस्व महत्त्वमतिरिक्तकरणशील वर्तते, किञ्च—तद्वानरयूथमपि स्थिरं स्वरूपेण दिनकरभास्वरं च येनाकारहेतुर्भवतो निरभिक्रमुक तेषु गन्धाढ्यप्रशिक्षेषु सहकारप्ररूपतया कल्पितेषु विषयवृक्षेषु विगतस्पृहं तथार्थेनिषयसम्पत्कल्मु-भरतःकथनरकोठके, ततस्तेनात्मीयवानरयूथेन सह मीलित्वा तथावक पितृवानरस्त्रीप्रमत्तन्वयमधुरित धीम पासहसुपर्युपरिपत्रिकासु धावत्पर्यन्तनारीविरचितपत्रिकामार्गं, तत्र च करिष्यति तस्य तद्वानरयूथ शुक्लध्यानाभिधानेन गोशीर्षचन्दनरसेन स्नपन, ततोऽविघ्नन्वेऽर्धमार्गमात्रे गाढानन्दनिर्भरं भविष्यति तस्मिःसार्द, ततो मारोहस्तस्युपरितनपत्रिकासु, तस्मिन्नारूढे भद्र! स्वमप्यारूढो भविष्यसि ममस्ते वीरितसम्वर्धनमात्मभूतं च तद्वानरक, ततो निःसहीभूय तद्विमुच्य भवतोपरितनपत्रिकासु स्वयमेवारोहणीय, ततः पयन्ते परि

कामार्गमपि परित्यज्य स्वसामर्थ्येन स्थित्वा पञ्चह्रस्वाक्षरोद्गिरणमात्रकालं निरालम्बनतया गगने ततो विशुद्ध्यापवरकमपरस्य गर्भगृहक परित्यज्य वानरक विपाकोद्धवने आनयित्वा सुमार्गं गन्तव्यमेकक्रमेणोद्गीय तत्र मठे स्थातव्यमनन्तकालं पूर्वगतलोकमध्येऽनुमाप्योऽ-
नन्तानन्द इति, मयोक्तं—यदाज्ञापयति नाथः, ततेवमनेनोपायेन भद्र! अज्ञानरक तत्र मठे नयनक्षम गुरुभिर्मे निवेदितमिति—अथ
निश्चित्य मौनीन्द्र, समाचार्यमिदं वचः। ततोऽकलङ्कस्तु नत्वा, मुनिमिस्थमवोचत ॥ ५१९ ॥ भात भारूपदिष्टं ते, गुरुणा मुनिस
त्तम! । सुन्दरं भवताऽऽरम्भि, मुक्तमेतत्कारणम् ॥ ५२०॥ ततोऽगृहीतसङ्केते!, सम्यग्बोधविधित्सया। सोऽकलङ्को महाभागो, मां
प्रतीत्समभाषत ॥ ५२१ ॥ एवं स्फुटाक्षरैः सर्वं, यदनेन निवेदितम्। तत्त्वया विदितं भद्र!, किं वा नो? घनवाहन! ॥ ५२२ ॥ अनेन
हि समाख्यातं, क्लेशनिर्मुक्तचेतसा। चित्तमेवात्मनो मुख्यं, संसारोत्तारकारणम् ॥५२३॥ तल्लेश्यापरिणामेन, क्लेशनिर्मोचनक्षमम्।
विशुद्धाध्यवसायेषु, गच्छदेवोपपद्यते ॥ ५२४ ॥ किंच—न केवलं शिवस्यैव चित्तमेवेह कारणम्। भवस्यापि तदेवेति, मुनयः सम्प्र
चक्षते ॥ ५२५ ॥ यतोऽपवरको योऽयं, यदेव गर्भगेहकम्। यच्च वानरकं भद्र!, तत्सर्वं प्राणिनां समम् ॥ ५२६ ॥ तत्र—व्याख्या
मो वर्णिताः पूर्वं, षड्लेश्यास्तत्र दर्शिते। वानरं तदात्मकं, विचित्रभवकारणम् ॥ ५२७ ॥ यस्यां यस्यां तदावस्था, करोत्युत्प्लवनं किल।
शीघ्रं तत्पत्रिकास्वेषु, तत्रैव नयति देहिनः ॥ ५२८ ॥ मयोक्तं—वयस्य! कोऽस्य भावितस्यार्थः?, अकलङ्केनोक्तं—आकर्णय—यल्लेश्या-
ध्यवसायेषु, म्रियन्ते किल देहिनः। तल्लेश्यासाकारेषु, जायन्ते ते भवान्तरे ॥ ५२९ ॥ असङ्ख्याध्यवसायेषु, यच्चित्तं वर्तमानकम्।
विचित्रयोनिरूपस्य, भवस्यास्य विपाचकम् ॥ ५३० ॥ सदोषं भवहेतुस्ते, भवान्येषां च देहिनाम्। निर्दोषं मोक्षहेतुस्ते, चित्तं भो
घनवाहन! ॥ ५३१ ॥ रत्नेषं चित्तरत्नं, तस्माद्यत्नेन परम्। धर्मोऽधर्मः सुखं दुःखं, यत्र सर्वं प्रतिष्ठितम् ॥ ५३२ ॥ जीवस्य

मावविचाव, नास्ति भेदः परस्परम् । आत्माऽतो रक्षितस्तेन, चित्तं येनेह रक्षितम् ॥ ५३३ ॥ अर्थाय भोगलौल्येन, यावद्यावदि
चर्वतः । चित्त कुवस्तस्वे तावत्सुखगम्योऽपि विपत्ते ? ॥ ५३४ ॥ "यदेव नि स्पृह भूत्वा, परित्यज्य बहिर्भ्रमम् । स्थिरं संपद्यते चित्त,
"तदा ते परमं सुखम् ॥ ५३५ ॥ मके कोविरि कोपान्धे, निम्राकर्वरि घोस्थिते । यदा सम मवेच्चित्त, तदा ते परम सुखम् ॥ ५३६ ॥
"स्वजने लोहसम्बद्धे, रिपुवर्गेऽपकारिणि । साम्युस्य ते यदा चित्त, तदा ते परम सुखम् ॥ ५३७ ॥ सम्पादिविषयग्रामे, सुन्दरेऽसु
"न्दरेऽपि च । यन्मकारं यदा चित्त, तदा ते परम सुखम् ॥ ५३८ ॥ गोशीर्षचन्दनालेपिवासीच्छेदकयोर्यदा । अभिन्नचित्तवृत्ति
"स्तदा ते परमं सुखम् ॥ ५३९ ॥ सांसारिकपदार्थेषु, सकलेषु ते यदा । अस्पृह चित्तपद्य स्यात्तदा ते परम सुखम् ॥ ५४० ॥
"दृष्टेपूरामलावण्य सुन्दरेषु योषिताम् । निर्विकारं यदा चित्तं, तदा ते परम सुखम् ॥ ५४१ ॥ यदा सत्त्वैकसारत्वादर्थकामपराङ्मु
"खम् । धर्मे रत मवेच्चित्त, तदा ते परमं सुखम् ॥ ५४२ ॥ रजस्तमोविनिर्मुक्त, स्तिमितोदधिसन्निभम् । निष्कल्लोल यदा चित्त, तदा
"ते परम सुखम् ॥ ५४३ ॥ मैत्रीकारुण्यमाध्यस्थ्यप्रमोदोदामभावनम् । यदा मोक्षैकतान तत्तदा ते परम सुखम् ॥ ५४४ ॥" इति
चित्त निराबाध्यो, नास्ति भो धनवाहन ! । परम सुखसन्दोहे, सिद्धो हेतुर्जगत्त्रये ॥ ५४५ ॥ ततोऽहमकलङ्कस्य, वाक्यैर्घनवासुदैः ।
सिक्तोऽगृहीतसङ्केते¹, मनाक् प्रशममागतः ॥ ५४६ ॥ ततः—निमित्ताऽपीह वाक्यैर्मम दत्तसमुद्भरैः । चिरात्तिताऽकलङ्केन, भूयसी
कर्मपद्धतिः ॥ ५४७ ॥ कर्मविविसमतीत्याह, भूमिकां पूर्ववर्तिनीम् । अप्यपश्च सतितो भद्रे¹, कर्मबन्धैः सुदुर्भिदः ॥ ५४८ ॥ तथा—
पद्मरागरत्नमहाक्षे, मया पूर्व निवेदितम् । स्मरसि त्व विशालाक्षि¹, सुपष्टरिवपद्धरा ॥ ५४९ ॥ ततोऽगृहीतसङ्केता, न मनीषमभा-
षत । न स्मरामि विशेषेण, स्मारयातस्समेव मे ॥ ५५० ॥ ततः संसारिजीवेन, सा मोक्ता चारुलोचना । इदं निवेदित भद्रे!, सम्पूर्ण

गुणसूरिणा ॥ ५५१ ॥ यथा मत्सुतकः पूर्वं, देशकालिकया गतः । भागवश महीः कालाग्निचारो नाम दारकः ॥ ५५२ ॥ मार्गानु
धारितायुक्तो, भवचक निरीक्ष्य सः । समागतो रहस्यस्थो, महामेतदन्यवेदयत् ॥ ५५३ ॥ यदुत—चारित्रधर्मराजेन, महामोहनरेश्वरः ।
सबलो यत्नपूर्वेन, युध्यमानो मयेक्षितः ॥ ५५४ ॥ ततश्चारित्रधर्मीय, सैन्यं निर्जित्य दर्पितः । वेष्टयित्वा स्थितस्तात !, महामोहन-
राधिपः ॥ ५५५ ॥ अथ तचातस्य वीक्ष्य, निरुद्धं तेन दर्पिणा । यल चारित्रधर्मीयमागतोऽहं तवान्तिके ॥ ५५६ ॥ अगृहीतसङ्केत-
योक्तं—स्तुत स्तुत मया तात !, सर्वमेतन्निवेदितम् । पूर्वमेव त्वया प्राप्यतोपदर्शनकाम्यया ॥ ५५७ ॥ अतः परं पुनर्येन, तात ! कि-
र्धिपिवसितम् । तन्मम स्तवपूर्वाय, सर्वमाख्यातुमर्हसि ॥ ५५८ ॥ ततः संसारिजीवेन, सा प्रोक्ता मृगलोचना । एषोऽहं कथयि
ष्यामि, समाकर्णय साम्प्रतम् ॥५५९॥ चित्तवृत्तिमहाटव्यां, तमिरुद्ध समन्ततः । स्थित चारित्रधर्मस्य, सैन्य कालमनन्तकम् ॥ ५६० ॥
ततस्तदाऽकलङ्कस्य, समीपे मम तिष्ठतः । सैन्ये मयाय भूतास्तः, सपक्षस्य निवेदय मे ॥ ५६१ ॥ सर्वं विपन्नमाकोश्य, सद्भूत रिपुपी
डितम् । चारित्रधर्ममुद्दिश्य, सद्घोषः समभापत ॥ ५६२ ॥ न कर्तव्यो विषादोऽत्र, देवास्माभिर्यतोऽधुना । मन्मनोरथवृक्षस्य, दृश्यते
कुसुमोद्गमः ॥ ५६३ ॥ तथाहि—यावत्संसारिजीवोऽस्माम्, न जानीते महाप्रभुः । विपर्यासापदेशैवा, देवास्माकं रिपूत्कराः ॥ ५६४ ॥
यदा तु स विजानीयादस्माकं स्वरूपमञ्जसा । तदा सपोषितास्तेन, भवामो रिपुघातकाः ॥ ५६५ ॥ इयं च दृश्यते देव !, चित्तवृत्तिम
हाटवी । यथाऽधुना मनाक् शुभा, गाढतामसवर्जिता ॥ ५६६ ॥ तथाऽहं तर्कयामीह, देवोऽसौ सर्वनायकः । अस्मद्विक्षेपविज्ञानसमीपे
मनु वर्तते ॥ ५६७ ॥ युग्मम् । यत हि तामसे प्रभा, न दृष्टास्तेन आतुपित् । अधुना दर्शनस्यास्ति, यैमस्य तत्र कारणम् ॥ ५६८ ॥
एव च स्थिते—स कर्मपरिणामाख्य, प्रभा राजानमुत्तमम् । पार्श्वे संसारिजीवस्य, प्रेष्यतां कोऽपि मानवः ॥ ५६९ ॥ ततोऽनुकूलित

मम चित्तस्य, नास्ति भेदः परस्परम् । आत्माऽतो रक्षितस्तेन, चित्तं येनेह रक्षितम् ॥ ५३३ ॥ अर्थाय भोगयोगस्येन, यावद्धावसि सर्वतः । चित्त तावत्सुखस्य गन्धोऽपि विद्यते ? ॥ ५३४ ॥ "यदेदं निःसारं मत्वा, परित्यज्य बहिर्भ्रमम् । स्थिरं संपत्स्यते चित्त, "तदा ते परमं सुखम् ॥ ५३५ ॥ मत्के स्तोऽपरि कोपान्धे, निन्दाकर्तरि तोषिते । यदा सम भवेच्चित्त, तदा ते परमं सुखम् ॥ ५३६ ॥ "स्वजने स्नेहसम्बद्धे, रिपुवर्गेऽपकारिणि । स्याज्जुल्यं ते यदा चित्तं, तदा ते परमं सुखम् ॥ ५३७ ॥ शब्दादिविषयग्रामे, सुन्दरेऽसु- "न्दरेऽपि च । एकाकारं यदा चित्त, तदा ते परमं सुखम् ॥ ५३८ ॥ गोशीर्षचन्दनालेपिवासीच्छेदकयोर्यदा । अभिन्नचित्तवृत्तिः "स्यात्तदा ते परमं सुखम् ॥ ५३९ ॥ सांसारिकपदार्थेषु, जडरूपेषु ते यदा । अस्निग्धं चित्तपद्मं स्यात्तदा ते परमं सुखम् ॥ ५४० ॥ "उद्भूतरूपलावण्यवन्धुराङ्गेषु योषिताम् । निर्विकारं यदा चित्त, तदा ते परमं सुखम् ॥ ५४१ ॥ यदा सर्वैकसारत्वादर्थकामपराङ्मु- "खम् । धर्मे रतं भवेच्चित्तं, तदा ते परमं सुखम् ॥ ५४२ ॥ रजस्तमोविनिर्मुक्तं, स्तिमितोदधिसन्निभम् । निष्कल्लोलं यदा चित्त, तदा "ते परमं सुखम् ॥ ५४३ ॥ मैत्रीकारुण्यमाध्यस्थ्यप्रमोदोदामभावनम् । यदा मोक्षैकध्यानं वचित्त ते परमं सुखम् ॥ ५४४ ॥" इति चित्त विज्ञापयन्तो, नास्ति मो धनवाहन[1] । मरणं सुखसन्दोहे, स्थितो हेतुर्भगवत्ये ॥ ५४५ ॥ ततोऽनन्तकषायस्य, वाटकेऽर्पयतामुदैः । स्थितोऽगृहीतसङ्केते[1], भवाद् महाक्रमागतः ॥ ५४६ ॥ ततः—निर्विवाऽपीह वाटधेमेम दशास्वसुन्दरैः । विदारिताऽकलङ्केन, भूयसी कर्मपद्धतिः ॥ ५४७ ॥ कर्मविस्थितसीमान्तं, भूयिष्ठां पूर्ववर्तिनीम् । अन्यत्र सस्थितो भद्रे!, कर्मभन्त्येः सुदुर्भिदः ॥ ५४८ ॥ इत्थम्— सदागमदेवमस्थाने, मया पूर्वं निवेदितम् । स्मरसि त्वं विशालाक्षि[1], मुग्धसूरिवचस्तदा ॥ ५४९ ॥ ततोऽगृहीतसङ्केता, व भवीदमभा- षत । न स्मरामि विशेषेण, स्मारयात्ससमेव मे ॥ ५५० ॥ ततः संसारिजीवेन, सा भोक्ता धारणोपना । इद निवेदितं भद्रे!, समृतं

सन्निधौ । गुरोश्चस्य मया सार्धं, विहितं पादवन्दनम् ॥ ५८८ ॥ समासम्भाषणयोगेन, धर्मलाभपुरःसरम् । सूरिणा कोविदाख्येन, तेन सम्भाषणं कृतम् ॥ ५८९ ॥ अथाकलङ्कपृष्टस्य, कुर्वतो धर्मदेशनाम् । तस्य पार्श्वे महाभाग, मया दृष्टः सदागमः ॥ ५९० ॥ ज्ञापित आकलङ्केन, यथा भो धनवाहन ! । आराधनीयः साधूनामेषामेष सदागमः ॥ ५९१ ॥ एते यस्य सदाऽऽदेशं, कुर्वन्ति नतमस्तकाः । एषोऽस्य सूरिर्मानीते, गुणसम्भारगौरवम् ॥ ५९२ ॥ तवैष ते हितो भद्र !, धर्माधर्मविवेचकः । अतः सदुपदेशार्थमेन विज्ञातुमर्हसि ॥ ५९३ ॥ ममामीषां च साधूनां, सूरेश्चास्य परिस्फुटम् । यज्ज्ञानं भद्र ! तज्जातमस्यादेव सदागमात् ॥ ५९४ ॥ ततोऽयं कोविदाचार्यः, सम्बन्धं ते करिष्यति । सार्धं सदागमेनोच्चैरमुना हितकारिणा ॥ ५९५ ॥ ततस्तमस्य सम्बन्धास्सर्वभावसहिताहितम् । क्रमेण ज्ञास्यसे तात !, तदेनं सीघ्रमाश्रय ॥ ५९६ ॥ ततस्तदुपरोधेन, मया भद्रे ! सदागमः । प्रतिपन्नस्तदा किञ्चिच्छुष्टेनैवान्तरात्मना ॥ ५९७ ॥ ज्ञापिताश्च गुणाः केचित्तेन कोविदसूरिणा । दर्शितं चास्य विज्ञानं, ममाज्ञानं मम मामकम् ॥ ५९८ ॥ केवलं—अकलङ्कोपरोधेन, विदधे चैत्यवन्दनम् । ददामि दानं साधुभ्यो, भावशून्यमहं तदा ॥ ५९९ ॥ एवं च भद्रकः किञ्चिदकलङ्कानुरोधतः । सञ्जातोऽहं तदा भद्रे !, नमस्कारादिपाठकः ॥ ६०० ॥ अकलङ्कस्तु समालम्ब्य, मातापित्रादिकं जनम् । प्रतिपन्नस्तदा दीक्षां, कोविदाचार्यसन्निधौ ॥ ६०१ ॥ ततश्च—सुसाधुपरिवारेण, तेन कोविदसूरिणा । सार्धं गतो विहाराय, सोऽन्यत्र मुनिपुङ्गवः ॥ ६०२ ॥ इतश्च—यावत्सदागमस्तत्र, मत्समीपमुपागतः । महामोहनृपे तावज्जात एवाभियोगो मे ॥ ६०३ ॥ ज्ञानसंवरणं ज्ञात्वा, सदागमभयातुरम् । ततः प्रोक्तो महामोहो, रागकेसरिमन्त्रिणा ॥ ६०४ ॥ एतावन्तं वयं कालं, निश्चिन्ता देव ! संस्थिताः । यन्मूलेन स चित्तस्थो, ज्ञानसंवरणो नृपः ॥ ६०५ ॥ यतः—दृष्टः सदागमस्तत्र, गत्वाऽभ्यर्णे व्यवस्थितः । देव ! संसारिजीवस्य, विरक्तः स च भूपतेः ॥ ६०६ ॥ नोपेक्षणीय देवेन, स

स्तेन, देव! भवेन भूयसा। भविष्यत्येव निर्भिद्य, सोऽस्मदर्शनभाजनः ॥ ५७० ॥ ततश्चारित्रधर्मेण, सद्बोध प्रति भाषितम्। साधु भो गदितं साधु, भूयिः कः प्रेषणोचितः? ॥ ५७१ ॥ ततश्चारित्रधर्माय, सद्बोधेन निवेदितम्। अथ सदागमस्तत्र, देव! प्रस्थापनोचितः ॥ ५७२ ॥ बहुधः परिचयस्तस्य यदाऽनेन भविष्यति। तदाऽस्मदर्शनाकाङ्क्षा, तस्य संपत्स्यते ध्रुवम् ॥ ५७३ ॥ स क्रमपरिणामात्तस्य तोऽस्मान् ज्ञापयिष्यति। तस्मै वयं भविष्यामस्ततः प्रभुरिषानुकाः ॥ ५७४ ॥ ततश्चारित्रधर्मेण, प्रपन्न अभिभाषितम्। प्रवर्तितो यथादिष्टं, मां प्रक्षेप सदागमः ॥ ५७५ ॥ उक्तश्च राजा सद्बोधः, किमेषोऽपि महीयताम्? । सम्यग्दर्शनसन्नामा, तस्य पार्श्वे महत्तम! ॥ ५७६ ॥ सद्बोधेनोदितं देव!, नादरेण महत्तमः। तस्य संसारिजीवस्य, गतः पार्श्वे न संशयः ॥ ५७७ ॥ किं च—सदागमोऽपि सच्छो, मुक्तोऽनेनोपपद्यते। अनेन सहितः सोऽस्मान्, सर्वानप्यवमोत्स्यते ॥ ५७८ ॥ किं तु नावसरोऽद्यापि, तेन नैष महीयते। प्रस्तावरहितं कार्यं, न कुर्वन्ति विचक्षणाः ॥ ५७९ ॥ नृपतिनोक्तं—कदा पुनरसौ भवित!, प्रस्तावोऽस्य भविष्यति। सद्बोधेनोदितं देव!, समाकर्णय कथ्यते ॥ ५८० ॥ यदा सदागमेनोच्चैः, रचितोऽसौ भविष्यति। पार्श्वे तस्य तदा देव!, प्रेषणीयो महत्तमः ॥ ५८१ ॥ भूयो भूयो युतोऽनेन, दीर्घमासाद्यमेषता। संसारिजीवः प्रस्तावस्तदाऽस्माप्युपपत्स्यते ॥ ५८२ ॥ ततोऽभ्युपगते वाक्ये, मयिप्रस्थेन भूभुजा। समागतः क्रमेणाथ, मत्समीपे सदागमः ॥ ५८३ ॥ एवं च—प्रभुकः पूर्वमेवासीन्महामोहादिभिर्भृशम्। ज्ञानसंवरणो नाम, मत्समीपे नराधिपः ॥ ५८४ ॥ स हि चारित्रधर्मीयं, विरोधस्ते सदा बलम्। महामोहमहानीकं, सततं पोषयत्यलम् ॥ ५८५ ॥ एवं च स्थिते—छलेनैव निभिन्ना, निर्नष्टमयकारण्याः। स्थिता रिपुभिराक्रम्य, महामोहादयः सदा ॥ ५८६ ॥ ततः सदागमं वीक्ष्य, प्रभासन्नं समागतम्। ज्ञानसंवरणः क्षीम, क्षीनक्षीनो व्यवस्थितः ॥ ५८७ ॥ अथाकम्पः समासो, ध्यानारूढस्य

मूवया । यच पौद्गलिक किंचिद्वित्ताद्यन्यदिभासकम् ॥ ६२५ ॥ सदागमस्तदाचष्टे, यथेव क्षणभङ्गुरम् । दुःखात्मक मलक्लिम, निःसमाव बहिश्चरम् ॥ ६२६ ॥ तदत्र मूर्च्छा मा कार्षीर्मो कार्षीर्धनवाहन ! । आत्मा ते ज्ञानसद्वीर्यदर्शनानन्दपूरितः ॥ ६२७ ॥ ततस्तत्रैव युक्तस्ते, चित्तबन्धो नरोत्तम ! । येन त्व निर्वृतिं यासि, सततानन्दसुन्दराम् ॥ ६२८ ॥ चक्षुर्भिः कलापकम् । महामोहस्तु मे सर्वं, तद्वाक्यं ताम सम्पदः । गात्र शब्दादिभोगांश्च, यद्यान्यदपि तादृशम् ॥ ६२९ ॥ स्थिरं सुखात्मकं चारु, निर्मलं हितमुत्तमम् । इत्येव कथयत्युच्चैरुपदेशं च यच्छति ॥ ६३० ॥ युग्मम् । यदुत—नास्ति जीवो न वा देवो, न मोक्षो न पुनर्भवः । न पुण्यपापे सद्भूते, भूतमात्रमिदं जगत् ॥ ६३१ ॥ यतो यावदयं देहो, तिष्ठते धनवाहन ! । यथेष्टचेष्टया तावत्तिष्ठ स्वाद तिवानिशम् ॥ ६३२ ॥ सद्भोगैः प्रीणयाऽऽत्मान, मानयामलसेवनाः । सुङ्क्ष्व भुङ्क्ष्व यथाकाम, मा भूत्तचनं कृथाः ॥ ६३३ ॥ परिग्रहस्तु मां भूते, यथा भो धनवाहन ! । हिरण्यधान्यरत्नादिसम्भारं कुरु यत्नतः ॥ ६३४ ॥ यः प्राप्त पालयत्यर्थमप्राप्त मीलयत्यलम् । न च सन्तोषमादत्ते, तस्य सौख्यमनारतम् ॥ ६३५ ॥ अह तु त्रितयस्यापि, वाक्यमाकर्ण्य तादृशम् । ईषद्दोलायितश्चित्ते, यावज्जातः सुलोचने ! ॥ ६३६ ॥ महामोहबलेनासौ, ज्ञानसंवरणो नृपः । तावत्क्रमं परित्यज्य, मम पार्श्वे व्यवस्थितः ॥ ६३७ ॥ ततः सदागमेनोक्त, यच्चवाक्य मनोहरम् । तस्यार्थो न मया ज्ञातस्तेन चित्तं न रञ्जितम् ॥ ६३८ ॥ यथाहस्तु पुनर्भद्रे !, महामोहपरिग्रहौ । तदलं मामके चित्ते, यथा रज्जु सुपासिते ॥ ६३९ ॥ ततोऽहं तत्परित्यज्य, देववन्दनपूजनम् । नमस्कारादिपाठं च, सञ्जातो भोगमूर्च्छितः ॥ ६४० ॥ दानं च साधुवर्गादेर्विनिवार्य ततः परम् । धनसङ्ग्रहणे रक्तः, पीडयामि करैर्जनम् ॥ ६४१ ॥ सर्वसांसारिकार्येषु, मूर्च्छा गाढं विवर्धते । स महामोहवीर्येण, रोचते न सदागमः ॥ ६४२ ॥ तथाऽपि—परिग्रहस्य वीर्येण, सर्वथा न्यूनचेतसः । न ममेच्छा तदा पूर्णा, प्राप्तैः सर्वधने

तुष्टः स बालिशः । ततश्च चिन्तयत्येव, महाहर्षवशं गतः ॥ ६५१ ॥ धन्योऽहं कृतकृत्योऽहं, यस्येयं मम सुन्दरी । मनोहरा श्रुतिर्भार्या, सप्रभा पुण्यकर्मणः ॥ ६५२ ॥ ततस्तं तादृशं मत्वा, श्रुतौ स्नेहपरायणम् । बालिशं मधुरैर्वाक्यैः, स सङ्गः समभाषत ॥ ६५३ ॥ अत्यन्तसुन्दरो देव!, दैवेन हितकारिणा । देवेन सार्धं स्वामिन्याः, संयोगो घटितो ह्ययम् ॥ ६५४ ॥ तथाहि—रूपं वयः कुलं शीलं, लावण्यं च परस्परम् । दम्पत्योः प्रेमसहितमनुरूपं सुदुर्लभम् ॥ ६५५ ॥ एतच्च युवयोः सर्वं, सप्रभं पुण्यकर्मणा । केवलं वर्मतीतोऽस्य, प्रमाणन्तो मनोहरः ॥ ६५६ ॥ ततः स बालिशेनोक्तः, शठात्मा दासदारकः । भद्र कश्च स वर्णेत?, स प्राह प्रियसेवनम् ॥ ६५७ ॥ बालिशः प्राह किं तस्याः, प्रियं? सङ्ग! निवेद्यताम् । सङ्गेनोक्तं यथा देव!, प्रियोऽस्या मधुरो ध्वनिः ॥ ६५८ ॥ बालिशः प्राह यद्येवं, ततस्तस्य निवेदनम् । भद्रान्तः कारयाम्येनां, साधु साधु निवेदितम् ॥ ६५९ ॥ महाप्रसाद इत्येवं, तुष्टश्च स च दारकः । स्नेहाभिषेकसिक्तस्तेन, हृदये बालिशेन भोः! ॥ ६६० ॥ ततश्च काकलीगीतवेणुवीणाकलस्वनम् । तां श्रुतिं भावयन्नेव, बालिशो हन्त मोदते ॥ ६६१ ॥ चिन्तयति च—अहो सुखमहो स्वर्गस्तथाऽहो मम धन्यता । यस्येदृशी श्रुतिर्भार्या, सततानन्ददायिका ॥ ६६२ ॥ ततश्च—हृदये दारकं कृत्वा, त सङ्गं स्नेहनिर्भरः । श्रुते स कालं कुर्वाणस्ते नित्यं कलस्वनैः ॥ ६६३ ॥ स्वच्छ वेनान्यकर्तव्य, धर्मादूरेण स स्थितः । पिशाचभावतया भाती, हास्यश्चासौ विवेकिनाम् ॥ ६६४ ॥ इतश्च कोविदेनापि, प्राप्तोऽस्य सदागमः । ममैषा हिता भार्या, किं वा नेति? निवेद्यताम् ॥ ६६५ ॥ ततः सदागमेनोक्तं, न हिता ते नरोत्तम! । ससङ्गेयं श्रुतिर्भार्या, तत्रानर्थस्य कारणम् ॥ ६६६ ॥ इयं हि प्रहिता पूर्वं, रागकेसरिमन्त्रिणा । इह जगद्वशीकर्तुं, पञ्चमानुषमध्यगा ॥ ६६७ ॥ इतश्च—स कर्मपरिणामस्य, भ्रातृव्यो रागकेसरी । प्रसिद्धमरटो लोके, तस्यामात्यो विक्षेपकः ॥ ६६८ ॥ स कर्मपरिणामाख्यः, सार्वभौमो महा-

रति ॥ ६४३ ॥ ततो मे वाक्यं श्रुत्वा, दूरीभूतः सदागमः । अभ्यासमागतौ सद्यो, महामोहपरिग्रहौ ॥ ६४४ ॥ अथान्यदा समायातः, सोऽकलङ्कगुरुः पुनः । मुधामुनिभिः समाकीर्णः, सूरिः कोविदनामकः ॥ ६४५ ॥ ततोऽकलङ्कराभिख्यातगुरोऽयं तस्य वन्दकः । यथोऽकलङ्कः सूरिश्च, वन्दितो मुनिभिर्युतः ॥ ६४६ ॥ इतश्च—ज्ञानालोकेन विज्ञातं, तेन कोविदसूरिणा । मदीयं चरितं लोकात् अकलङ्केन चाखिलम् ॥ ६४७ ॥ ततः प्रोक्तोऽकलङ्केन, सूरिर्नाथ[1] विशेषतः । सदागमस्य माहात्म्यं, यत्काहनभूज्जुषे ॥ ६४८ ॥ तथा दुर्जनसङ्गे च, ये दोषाः सन्ति देहिनाम् । निवेदनीयास्तेऽप्यस्मै, विशेषं येन बुध्यते ॥६४९॥ युग्मम् । ततः सदागमे भक्तो, दुष्टस्पर्शनवर्जितः । इहामुत्र च येनायं, सुखसन्दोहमश्नुते ॥ ६५० ॥ कोविदसूरिणाऽभिहितं—एवं क्रियते, समाकर्णयतु महाराजः—ततो अकलङ्कोपरोधेन भवभयविघातोऽत्र सूरेः महावरः, सूरिणाऽभिहितं—अस्ति क्षमातलं नाम नगरं तत्र स्वमलनिचयो नाम राजा तस्य तदनुभूतिर्नाम महादेवी, तयोश्च कोविदबालिशाभिधानौ द्वौ तनयौ, इतश्च जन्मान्तरे तस्य कोविदस्यालीकेन सदागमेन सह परिचयः, ततो बालसुनन्दोऽयं तावदीहापोहमार्गणगवेषणं कुर्वतः सकाशात् तस्य आविष्करणं प्रभूतमभिधानन्तः गृहीतोऽपि हितगुरुपुद्गला निवेदितं बालिशस्य तस्य स्वरूपं न प्रतिपन्नं तेन पापात्मना, इतश्च कर्मपरिणाममहाराजेन प्रहिता तयोः कोविदबालिशयोः सकाशं श्रुतिर्नाम कन्यका, तस्याश्च प्रहितोऽग्रगामी चक्षोऽतिचतुरः सम्बन्धघटनापटुः सङ्गो नाम दासदारकः, आगता च पूर्वो द्वावपि तौ तथा भ्रातरौ परिणीता सा ताभ्यां, अस्ति च तयोः कोविदबालिशयोः परिग्रहे निजदेहो नाम पर्वतः तस्यास्ति मूर्धाभिधानमुपरि महाकूटं तस्योभयपार्श्वयोर्विधेये सपरिक्षेपे श्रवणनामिके द्वे अपवरिके हट्टे ते तथा अभिलषितवस्तुसाधकयोर्निवासः ततः स्थिता तयोरेव सा भर्त्रनुज्ञाता सती, तत्र च कृतनिवासा सा श्रुतिस्ताभ्यां कोविदबालिशाभ्यां सार्धं विपरतीति ।—इतश्च तौ समासाद्य, परि

तुष्टः स बालिशः । ततश्च चिन्तयत्येव, महाहर्षवशं गतः ॥ ६५१ ॥ धन्योऽहं कृतकृत्योऽहं, यस्येयं मम सुन्दरी । मनोहरा श्रुतिर्भार्या, सपत्ना पुण्यकर्मणः ॥ ६५२ ॥ ततश्च तारकं मत्वा, श्रुतौ स्नेहपरायणम् । बालिशं मधुरैर्वाक्यैः, स सङ्गः समभाषत ॥ ६५३ ॥ मत्सन्त्सुन्दरो देव!, दैवेन हितकारिणा । देवेन सार्धं स्वामिन्याः, संयोगो घटितो ह्ययम् ॥ ६५४ ॥ तथाहि—रूपं वयः कुलं शीलं, लावण्यं च परस्परम् । दम्पत्योः प्रेमसहितमनुरूपं सुदुर्लभम् ॥ ६५५ ॥ परत्र सुखयोः सर्वं, सपत्न पुण्यकर्मणा । केवलं वर्धेनीयोऽयं, प्रसादम्यो मनोहरः ॥ ६५६ ॥ ततः स बालिशेनोक्तः, शठात्मा हासकारकः । यथा कथं स वर्धेत?, स प्राह प्रियसेवनात् ॥ ६५७ ॥ बालिशः प्राह किं तस्याः, प्रियं? सङ्ग! निवेद्यताम् । सङ्गेनोक्तं यथा देव!, प्रियोऽस्या मधुरो ध्वनिः ॥ ६५८ ॥ बालिशः प्राह यद्येवं, ततस्तस्य निषेवणम् । प्रभाम्यः कारयाम्येनां, साधु साधु निवेदितम् ॥ ६५९ ॥ महाप्रसाद इत्येवं, तुष्टात्मा स च तारकः । स्नेहाभिनिवेक्षिप्तस्तेन, हृदये बालिशेन भोः! ॥ ६६० ॥ ततश्च काकलीगीतवेणुवीणाकलस्वनम् । तां श्रुतिं भावयन्नेव, बालिशो हन्त मोदते ॥ ६६१ ॥ चिन्तयति च—अहो सुखमहो स्वर्गस्यायातो मम धन्यता । यस्येदृशी श्रुतिर्भार्या, सततानन्ददायिका ॥ ६६२ ॥ ततश्च—हृदये तारकं कृत्वा, स सङ्ग स्नेहनिर्भरः । श्रुतेः स लालनं कुर्वन्नास्ते नित्यं कलस्वनैः ॥ ६६३ ॥ अत्र चेमान्य कर्तव्यं, धर्मादूरेण स स्थितः । पित्तप्रायतया ख्यातो, हास्यप्रायो विवेकिनाम् ॥ ६६४ ॥ इतश्च कोविदेनापि, प्रभितोऽयं सदागमः । मदमेषा स्थिता भार्या, किं वा नेति? निवेद्यताम् ॥ ६६५ ॥ ततः सदागमेनोक्तं, न स्थिता ते नरोत्तम! । ससङ्गेय श्रुतिर्भार्या, तत्रा कर्मैव कारणम् ॥ ६६६ ॥ इयं हि महिला पूर्वं, रागकेसरिमन्त्रिणा । इह जगत्पतीकर्तुं, पञ्चमानुषसम्पगा ॥ ६६७ ॥ इतश्च—स कर्मपरिणामस्य, भ्रातृभ्यो रागकेसरी । प्रसिद्धमरटो लोके, तस्यामात्यो विशेषतः ॥ ६६८ ॥ स कर्मपरिणामाख्यः, सार्वभौमो नरा

